॥ सर्वशास्त्रार्थ अणु भाष्य ( आनन्दतीर्थ) ॥

सर्वशास्त्रार्थसंग्रहः

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

ॐ विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानंदोऽंतरः खवत् ॥ १.१ ॥

प्रणेता ज्योतिरित्यादैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैः सर्व गुणत्त्वतः ॥ १.२ ॥

सर्वगोऽत्ता नियंता च दृश्यत्त्वादुज्झितः सदा ।
विश्वजीवांतरत्त्वादैर्लिङ्गैः सर्वैर्युतः स हि ॥ १.३ ॥

सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ॥ १.४ ॥

ज्ञेयो न वेदैः शूद्रादैः कन्दकोऽन्यश्च जीवतः ।
पतित्त्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ॥ १.५ ॥

मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ।
अव्यक्तः कर्मवाच्यैश्च वाच्य एकोऽमितात्मकः ॥ १.६ ॥

अवान्तरं कारणं च प्रकृतिः शून्यमेव च ।
इत्यादन्यत्र नियतैरपि मुख्यतयोदितः ।
शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ॥ १.७ ॥

॥ इति प्रथमोऽध्यायः ॥

॥ अथ द्वितीयोऽध्यायः ॥

ॐ श्रौतस्मृतिविरुद्धत्त्वात् स्मृतयो न गुणान्हरेः ।
निषेद्धुं शक्नुयुर्वेदानित्यत्वान्मानमुत्तमम् ॥ २.१ ॥

असज्जीवप्रधानादिशब्दाब्रह्मैव नापरम् ।
वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ॥ २.२ ॥

स्वातन्त्र्यात्सर्वकर्तृत्त्वान्नायुक्तं तद्भवेच्छ्रुतिः ।
भ्रान्तिमूलतया सर्व समयानामयुक्तितः ॥ २.३ ॥

न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ।
आकाशादिसमस्तं च तज्जं तेनैव लीयते ॥ २.४ ॥

सोऽनुत्पत्तिलयः कर्ता जीवः तद्वशगः सदा ।
तदाभासो हरिः सर्व रूपेष्वपि समः सदा ॥ २.५ ॥

मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवाः ।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ॥ २.६ ॥

सर्व दोशोज्झितः तस्माद् भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धास्तस्य वेदेषु सर्वथा ॥ २.७ ॥

॥ इति द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

ॐ शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ॥ ३.१ ॥

याति तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत् ।
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ॥ ३.२ ॥

सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तिस्तारतम्येन तारतम्यं विमुक्तिगम् ॥ ३.३ ॥

सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथा क्रमं बहुगुणैर्ब्रह्मणस्त्वखिलैर्गुणैः ॥ ३.४ ॥

उपास्यः सर्वदेवैश्च सर्वैरपि यथा बलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं ॥ ३.५ ॥

सर्वेऽपि पुरुषार्थास्युः ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानावंश्च सर्वदोषैरपि क्वचित् ॥ ३.६ ॥

गुणदोषैः सुखस्यापि वृद्धि ह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥ ३.७ ॥

॥ इति तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्यायः ॥

ॐ विष्णुर्ब्रह्म तथाऽदित्यत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥ ४.१ ॥

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योऽभयस्यापि सर्वस्यान्यस्य भोगतः ॥ ४.२ ॥

उत्तरेषोत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥ ४.३ ॥

वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।

उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः ॥ ४.४ ॥

अर्चिरादि पठा वायुं प्राप्य तेन जनार्दनम् ।

यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहाऽमुना ॥ ४.५ ॥

यथासङ्कल्पभोगाश्च चिदानन्द शरीरिणः ।

जगत्सृष्ट्यादिविशयं महासामर्थ्य मप्यृते ॥ ४.६ ॥

यथेष्टशक्तिमंतश्च विना स्वाभाविकोत्तमान् ।

अनन्यवशगाश्चैव वृद्धिह्रास विवर्जिताः ।

दुःखादिरहितं नित्यं मोदंतेऽविरतं सुखम् ॥ ४.७ ॥

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः ।

कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥ ४.८ ॥

नमो नमोऽशेषदोषदूर पूर्णगुणात्मने ।

विरिञ्चिशर्वपूर्वेड्य वंद्याय श्रीवराय ते ॥ ४.९ ॥

॥ इति चतुर्थोऽध्यायः ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं

ब्रह्मसूत्राणुभाष्यं सम्पूर्णम्

॥ भारतीरमणमुख्यप्राणंतर्गत श्रीकृष्णार्पणमस्तु ॥